मण्डलिततरुषण्डया, (य) गजपति-(१) पातित-पादप-परिहार-वक्रीकृत-मार्गया, (र) जन-(२) जनित-तृण-पर्ण-काष्ठ-कोटि-कूट-प्रकटित-वीर-पुरुष-(३) घात-स्थानया, (ल) महापादप-मूलोत्कीर्ण-कान्तार-दुर्गया, (व) तृषित-पथिक-खण्डित-दलोज्झितामलकीफल-निकरया, (श) विकसित-करञ्ज-मञ्जरी-रजोविच्छुरित-तटेस्तट-तरु-बद्ध-(४) पटच्चर-कर्पट-ध्वज-चिह्नैरिष्टकाश्रित-(५)

---

वक्ष्यमाणस्य विशेषणानि। अतिप्रवृद्धा अतीववृद्धिं गताः प्रकाण्डाः स्कन्धदेशा येषां ते तादृशाः पादपाः प्राया बहुला यस्यां तथा।

(य) मालिनीति। मालिनीनामकलतानां मण्डपैर्मण्डलितं वेष्टितं तरुषण्डं वृक्षसमूहो यस्यां तथा।

(र) गजेति। गजपतिभिः पातितानां पादपानां परिहारेण परित्यागेन वक्रीकृतो मार्गः पन्था यस्यां तथा।

(ल) जनेति। जनैः पथिकलोकैः जनितं आत्मरक्षणाय संगृहीतं यत् तृणपर्णकाष्ठानां कोटेः कोटिसंख्यायाः कूटं राशिः तेन प्रकटितं सूचितं वीरपुरुषाणामपि घातस्थानं हिंस्रजन्तुभिर्वधस्थानं यस्यां तथा। पथिका हि तादृशवनमध्ये हिंस्रजन्तुभ्य आत्मरक्षणाय तृणादिकूटमध्ये प्रविश्य रात्रौ निवसन्तीति प्रसिद्धिः। अत्र च्छेकानुप्रासवृत्त्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

(व) महेति। महापादपानां मूलेषु उत्कीर्णा निखन्य निर्मिताः कान्तारदुर्गा वनदुर्गामूर्त्तयो यस्यां तथा।

(श) तृषितेति। तृषितैः पिपासातुरैः पथिकैः खण्डितानि चर्वितानि दलानि कियन्ति खण्डानि येषां तानि उज्झितानि चर्वणानन्तरं परित्यक्तानि च एवम्भूतानि यानि आमलकीफलानि तेषां निकरः समूहो यस्यां तथा। "दलं शस्त्रीच्छदोत्सेधावद्ध्यं खण्डपर्णयोः।" इति विश्वः।

(ष) विकसितेति। विकसितानां करञ्जमञ्जरीणां रजोभिः परागैः विच्छुरितानि व्याप्तानि तटानि तीराणि येषां तैः। तटतरुषु बद्धा ये पटच्चराणां चौराणां कर्पटा वस्त्रखण्डा त एव ध्वजचिह्नानि येषां तैः।

---

লাগিলে, দূর হইতেই পুরাতন এক রক্তচন্দনবৃক্ষের উপরে বদ্ধ বিশাল এক রক্তবর্ণ ধ্বজ দেখিতে পাইলেন। সেই শুষ্ক বনের মধ্যে বহুসংখ্যক বৃক্ষেরই স্কন্ধদেশ (গুড়ি) খুব বৃদ্ধি পাইয়াছিল। (য) মালিনীলতার মণ্ডপে বৃক্ষসমূহ পরিবেষ্টিত ছিল। (র) বৃহৎ হস্তিগণ যে সকল বৃক্ষ উন্মূলন করিয়াছিল, পথিকগণ তাহা পরিত্যাগ করিয়া সরিয়া যাওয়ায় পথগুলি বক্র হইয়াছিল। (ল) হিংস্র জন্তু হইতে আত্মরক্ষা করিবার নিমিত্ত পথিকগণ কোটি কোটি তৃণ, পর্ণ ও কাষ্ঠের রাশি সংগ্রহ করিয়া রাখিয়াছিল; তাহাতে সে স্থানে বলবান্ পুরুষেরও হত্যা হইত, ইহা প্রকাশ পাইয়াছিল। (ব) পথিকগণ প্রকাণ্ড প্রকাণ্ড বৃক্ষের মূলে বনদুর্গার মূর্ত্তি খোদিত করিয়া রাখিয়াছিল। (শ) পিপাসার্ত্ত পথিকগণ এক এক দিক্ চর্ব্বণ করিয়া আমলকী-ফলসমূহকে ফেলিয়া দিয়াছিল। (ষ) এবং সেই বনমধ্যে কতকগুলি পুরাতন কূপ ছিল; প্রস্ফুটিত করমচা-মঞ্জরীর রেণুতে সেই কূপগুলির তীরদেশ ব্যাপ্ত হইয়াছিল;

---

(१) वनगजपति···। (२) अजन...। (३)...पुरुषच्छदय...। (४) तटबद्ध··· (५) इष्टकचित...।

शुष्क-पल्लव-विष्टरानुमित-पथिक-विश्रामैर्विश्रान्त-कार्पटिक-प्रस्फोटित-(१) चरण-धूलि-(२) धूसर-किसलय-लाञ्छितोपकण्ठैः पत्र-सङ्करासुरभीकृताशिशिर-पङ्किल-विवर्णास्वादुजलैर्व्रतति-ग्रन्थि-ग्रथित-पर्णपुट-तृण-पूली-(३) चिह्नानुमेयैः जरत्कान्तार-कूपैरसुलभ-सलिलतया अनभिलषितोद्देशया, (क) मधु-विन्दु-स्यन्दि-सिन्दुवार-(४) वनराजि-रजोधूसरित-तीराभिश्च कुब्जक-(५) लताजालकैर्जटिलीकृत-सैकताभिः अध्वगोत्खात-वालुका-कूपिकोपलभ्यमान-(६) कलुष-स्वल्प-सलि-

---

इष्टकासु स्थिता ये शुष्कपल्लवानां विष्टरा उपवेशनायास्तरणानि तैरनुमिताः पथिकानां विश्रामा येषु तैः। विश्रान्ता ये कार्पटिकास्तीर्थयात्रिकास्तैः प्रस्फोटिताः पल्लवद्वारा ताडनेनैव विकीर्णा याश्चरणधूलयस्ताभिर्धूसराणि यानि किसलयानि पल्लवानि तैर्लाञ्छितः उपकण्ठः समीपदेशो येषां तैः। पत्राणां नानाविधवृक्षपर्णानां सङ्करेण मिश्रणेन असुरभीकृतानि दुर्गन्धीकृतानि अशिशिराणि उष्णानि, पङ्किलानि आविलानि, विवर्णानि अस्वादूनि च जलानि येषां तैः। व्रततिग्रन्थिभिर्लताग्रन्थिभिर्ग्रथिता याः पर्णपुटयुक्तास्तृणपूल्यस्तृणनिर्मितपत्रपुटाधारविशेषास्ता एव चिह्नानि तैरनुमेयैर्दूराद्दृश्यमानत्वेनानुमातुं योग्यैः। पथिका हि रज्जोः पात्रस्य चाभावे तृणैः पूलीं निर्माय तत्र च पत्रपुटं निधाय लतया बद्धा तेन कूपाज्जलमुत्तोलयन्तीति प्रसिद्धिः। जरन्तः पुरातना ये कान्तारस्य महावनस्य कूपास्तैर्हेतुभिः, असुलभानि दुष्प्रापाणि सलिलानि येषु उद्देशेषु ते तथा तेषां भावस्तया हेतुना, अनभिलषिता गन्तुमनिष्टा उद्देशाः स्थानानि यस्यास्तया। अत्र स्वभावोक्तिरलङ्कारः।

(क) मध्विति। किञ्च, मधुविन्दुस्यन्दिन्यो मकरन्दकणवर्षिण्यो याः सिन्दुवारवनराजयस्तासां रजोभिः परागैः धूसरितानि धूसरवर्णीकृतानि तीराणि यासां ताभिः। कुब्जकानि क्षुद्रक्षुद्रनिकुञ्जानि तेषां लताजालकैर्लतासमूहैः, जटिलीकृतानि व्याप्तानि सैकतानि पुलिनानि यासां ताभिः। तथा अध्वगैः पथिकैः उत्खाता वालुकामपसार्य निर्मिता या वालुकासु कूपिकाः क्षुद्रक्षुद्रकूपास्तासु उपलभ्यमानानि कलुषाणि आविलानि

---

তীরজাত বৃক্ষে চৌরগণের বস্ত্রখণ্ড সকল বদ্ধ ছিল এবং সেই বস্ত্রখণ্ডগুলিই সেই কূপগুলির ধ্বজচিহ্ন হইয়াছিল; ইটের উপরে শুষ্ক পল্লবের আস্তরণ পাতা ছিল, তাহাতে পথিকগণের বিশ্রাম করার অনুমান হইতেছিল; তীর্থযাত্রিগণ বিশ্রাম করিবার সময়ে যে সকল পল্লবদ্বারা চরণের ধূলি ঝাড়িয়া ফেলিয়াছিল, সেই ধূলিতে ধূসরবর্ণ সেই সকল পল্লবে কূপগুলির প্রান্তভাগ চিহ্নিত ছিল; নানাবিধ বৃক্ষের পত্র মিশ্রিত হওয়ায় কূপগুলির জল,—দুর্গন্ধ, উষ্ণ, কর্দ্দমাক্ত, অন্যবর্ণ ও কটুরস ছিল এবং তৃণগুলিতে (খড়ের ঝোতে) সংস্থাপিত ও লতাবদ্ধ পত্রপুটরূপ চিহ্ন দেখিয়া দূর হইতেই সেই কূপগুলির অনুমান হইত; এই জাতীয় কূপমাত্র থাকায় জল সুলভ ছিল না বলিয়া লোকে সেই বনভূমিতে যাইতে ইচ্ছা করিত না। (ক) এবং কতকগুলি শুষ্ক পার্ব্বত্য নদীতে সেই বনের মধ্যস্থান উঁচু নীচু করিয়াছিল; মধুবিন্দুবর্ষী সিন্দুবার বৃক্ষের (নিসিন্দা গাছের) বনশ্রেণী হইতে রেণু পতিত হইয়া সেই নদীগুলির তীরদেশ ধূসরবর্ণ

---

(१)...प्रस्फुटित, स्फोटित...। (२) .धूलि...।
(३) तृणोलुपपुलाक...। (४)...सिन्धु वार...। (५) कुलक...। (६)...कूपकोपलभ्यमान...।

लाभिः शुष्क-गिरिनदिकाभिर्विषमीकृतान्तरालया, ( स ) कुक्कुट-(१) कौलेयक-रटितानुमीयमान-गुल्म-गहन-ग्रामटिकया शून्यया दिवसमटव्या गत्वा, ( ह ) परिणते रविविम्बे, (२) विम्वारुणातपविसरे वासरे, ( च ) निःशाखीकृत-कदम्ब-शाल्मली-पलाश बहुलैः शिखर-शेषैक-पल्लव-विड़म्बितातपत्रैः पादपैः, ऊर्द्ध-स्थित-(३) प्ररोह-स्थूल-स्थाणु-मूल-ग्रन्थि-(४) जटिलेषु हरितालकपिल-पक्व-वेणु-

खल्पानि च सलिलानि यासु ताभिः। शुष्का या गिरिनदिकाः पर्वतीयाः क्षुद्रनद्यस्ताभिः विषमीकृतानि उच्चावचीकृतानि अन्तरालानि मध्यभागा यस्यास्तया। अत्र वृत्त्यनुप्रासोऽलङ्कारः।

( ह ) कुक्कुटेति। कुक्कुटानां चरणायुधपक्षिणां कौलेयकानां कुक्कुराणाञ्च रटितैः शब्दैः अनुमीयमाना-स्तेषां ग्राम्यत्वादिति भावः, गुल्मगहनेषु तरुलतानिविड़स्थानेषु ग्रामटिकाः क्षुद्रक्षुद्रग्रामा यस्यां तया। तथा शून्यया निर्जनया, अटव्या वनेन वन्यपथेनेत्यर्थः, दिवसं गत्वा दिनमतिवाह्येत्यर्थः। अन्वयस्तूक्तः। स्वल्पार्थे चौप्रत्ययस्तमादित्वात् ततः स्वार्थे कः।

( च ) परीति। रविविम्बे सूर्य्यमण्डले, परिणते चरमावस्थापन्ने अस्तोन्मुखे सतीत्यर्थः, तथा वासरे दिवसे, विम्बवत् विम्बफलवत् अरुणो रक्तवर्णः आतपविसरः सूर्य्यालोकसमूहो यस्मिन् तादृशे सति। अत्र लुप्तोपमाच्छेकानुप्रासयोः संसृष्टिः।

( क ) निःशाखेति। निःशाखीकृता अरण्यवासिभिः शाखाशून्यीकृताः कदम्बशाल्मलीपलाशाः स्वनाम-प्रसिद्धा वृक्षा एव बहुलाः प्रचुरा येषु तैः, तथा शिखरेषु उपरिभागेषु शेषा अवशिष्टा एके एकैके ये पल्लवास्तै-र्विड़म्बितानि अनुकृतानि आतपत्राणि छत्राणि यैस्तैः, पादपैरसंख्यैर्वृक्षैः। विरलीकृत इति वक्ष्यमाणस्य कर्तृपदमेकमेतत्। अत्रार्थोपमालङ्कारः। किञ्च, ऊर्द्धस्थिता दण्डायमानीभूताः प्ररोहा नवाङ्कुरा येषां ते तथाभूता ये स्थूलाः स्थाणवः निःशाखास्तरुस्तम्भास्तेषां मूलग्रन्थिभिर्मूलदेशैर्जटिलानि व्याप्तानि तैः। हरिताल धातुविशेषस्तद्वत् कपिलैः पिङ्गलवर्णैः पक्ववेणुविटपपटलैः परिणतवंशशाखासमूहैः रचिता विहिता वृतिर्वेष्टनं येषां तैः। मृगेभ्यः पशुभ्यः पशुकर्तृकप्रियङ्गुभक्षणादित्यर्थः भयेन कृतास्तृण-पुरुषास्तृणनिर्म्मितपुरुषाकृतिपदार्था

করিয়াছিল; পুঞ্জীভূত লতাসমূহে পুলিনভাগ ব্যাপ্ত করিয়াছিল আর সেই সকল নদীতে বালির ভিতরে পথিকগণ, ক্ষুদ্র ক্ষুদ্র কূপ খনন করিয়াছিল, তাহাতে কর্দ্দমাক্ত অল্প অল্প জল পাওয়া যাইত এবং সেই বনের ভিতরে নিবিড়-তরুলতাময় স্থানে ক্ষুদ্র ক্ষুদ্র গ্রাম ছিল; (হ) বন-কুকুড়া ও কুকুরের শব্দে সেই গ্রামগুলিকে অনুমান করা হইতেছিল। (ক্ষ) (ম চিহ্নিত স্তম্ভের প্রথমে, এই অংশের অনুবাদ দ্রষ্টব্য)। (ক) সেই বনের বহুতর ক্ষেত্রে অসংখ্য বৃক্ষ ছিল; তাহার মধ্যে শাখাবিহীন কদম্ব, শাল্মলী ও পলাশবৃক্ষই বহুসংখ্যক ছিল, উপরিভাগে এক একটি পল্লবমাত্র থাকায় সেই বৃক্ষগুলি ছত্রের অনুকরণ করিতেছিল; বৃহৎ বৃহৎ স্থাণুর (মুড়ো গাছের) মূলে সেই ক্ষেত্রগুলি ব্যাপ্ত ছিল এবং সেই স্থাণুগুলির উপরে নূতন নূতন অঙ্কুর উঠিয়াছিল; হরিতালের ন্যায় পিঙ্গলবর্ণ পাকা বাঁশের কঞ্চী দিয়া সেই ক্ষেত্রগুলির বেড়া

(१) कुक्कुटकुल…। (२) परिणतरविविम्बे। (३) ऊर्द्धीकृत…। (४)…प्ररोहस्थ…।

विटपप-टल-रचित-(१) वृतिभिर्मृग-भय-कृत-तृण-पुरुषकैर्विपाकपाण्डुभिः फलितैः (२) प्रियङ्गु-प्रायैरटवीक्षेत्रैर्विरलीकृते वनप्रदेशे (३) चिरप्ररूढस्य रक्तचन्दनतरोरुपरि बद्धम्, (क) सरस-पिशित-पिण्ड-निभैरलक्तकैः, अभिनव-शोणितारुणेन रक्तचन्दनरसेन चार्द्रम्, (४) (ख) जिह्वा-(५) लता-लोहिनीभी रक्तपताकाभिः, केशकलापकान्तिना च कृष्णचामरावचूलेन प्रत्यग्रविशसितानां जीवानामिवावयवैरुपरचित-दण्ड-मण्डनम्, (ग) परिणद्ध-(६) वराटक-घटित-

शेषु तैः। पशवो हि तादृशान् पुरुषान् विलोक्य भयान्नोपसर्पन्तीति प्रसिद्धम्। विपाकेन विशेषेण पक्वतया पाण्डुभिः पाण्डुवर्णैः। तथा फलितैः सञ्जातफलैः। प्रियङ्गवः श्यामाः प्रायेण बाहुल्येन येषु तैः। अटवीक्षेत्रैरारण्यशस्यक्षेत्रैः, विरलीकृते सङ्कोचं नीते, वनप्रदेशे वनस्यैकदेशे, चिरप्ररूढस्य बहुपूर्वमुत्पन्नस्य अतीवप्राचीनस्य, रक्तचन्दनतरोरुपरि बद्धं रज्जुभिः संयतम्। रक्तध्वजमिति वक्ष्यमाणस्य विशेषणम्। एवमन्यदपि द्वितीयान्तपदं ज्ञेयम्।

(ख) सरसेति। सरसानि आर्द्राणि रक्तानि यानि पिशितपिण्डानि मांसखण्डानि तन्निभैस्तत्तुल्यैरलक्तकैः, अभिनवं सद्योनिःसृतं यत् शोणितं रक्तं तद्वदरुणेन, रक्तचन्दनेन च आर्द्रं क्लिन्नम्। अत्रार्थोपमालुप्तोपमयोर्मिथो निरपेक्षतया संसृष्टिः।

(ग) जिह्वेति। जिह्वा रसना लता इव लम्बमानत्वात्तद्वत् लोहिनीभिः रक्तवर्णाभिः, रक्तपताकाभिः लोहितवैजयन्तीभिः। अत्र लुप्तोपमालङ्कारः, तथा जिह्वालतालोहिनीभिः पताकाभिरित्यनेनैव वक्तव्यार्थनिर्वाहे रक्तपदमधिकमित्यधिकपदत्वदोषः, स च रक्तपदपरित्यागेनैव परिहरणीयः। केशकलापवत् कान्तिर्यस्य तेन, कृष्णचामरमेव अवचूलं अधोमुखी चूडा तेन च। अतएव प्रत्यग्रविशसितानां सद्योनिहतानां जीवानां अवयवैरङ्गैः उपरचितं कृतं दण्डे दण्डांशे मण्डनं भूषणं यस्य तमिव। पताकानां जिह्वातुल्यत्वात् कृष्णचामरस्य च केशसमानत्वादिति भावः। अत्र मण्डनरचनोत्प्रेक्षणात् क्रियोत्प्रेक्षालङ्कारः।

দিয়াছিল; পশুগণ শস্য ভক্ষণ করিবে—এই ভয়ে তৃণদ্বারা বহুতর কৃত্রিম পুরুষ নির্ম্মাণ করিয়া রাখিয়াছিল এবং পক্কতানিবন্ধন পাণ্ডুবর্ণ ও ফলসমন্বিত প্রিয়ঙ্গুলতাই সেই ক্ষেত্রগুলিতে বহুতর ছিল; চতুর্দ্দিকে এই জাতীয় ক্ষেত্রসমূহ থাকায় সেই বনের কোন একটি স্থান সঙ্কুচিত ছিল, সেই স্থানে অতি পুরাতন এক রক্তচন্দন গাছের উপরে সেই ধ্বজটা বাঁধা ছিল। (খ) রক্তাক্ত মাংসখণ্ডের ন্যায় গাঢ় আলতার রসে ও সদ্যোনিঃসৃত রক্তের ন্যায় অরুণবর্ণ রক্তচন্দনে সেই ধ্বজটা আর্দ্র ছিল। (গ) সেই ধ্বজটার উপরে লতার তুল্য লম্বমান জিহ্বার ন্যায় রক্তবর্ণ কতকগুলি রক্তপতাকা এবং কেশকলাপের ন্যায় সৌন্দর্য্যসম্পন্ন ও অধোমুখ কৃষ্ণবর্ণ কতকগুলি চামর বদ্ধ ছিল; তাহাতে বোধ হইতেছিল যে, সদ্যোনিহত প্রাণিগণের অঙ্গ দ্বারাই যেন সেই ধ্বজটার অলঙ্কার করা হইয়াছিল।

(१)...विटपिपटलरचित, विटपरचित···। (२) फलिनैः। (३) विरलीकृतवनप्रदेशे।
(४) अभिनवशोणितारुणेन चार्द्रम्। (५) रसेन आर्द्रं जिह्वा...। (६) परिणत···।

वुद्‌दार्द्धचन्द्र-खण्ड-खचितं, सुत-महिष-रक्षणावतीर्ण-दिनकरावतारित-शशिनेव विराजितशिखरम्, ( घ ) दोलायित-शृङ्ग-सङ्गि-लोह-शृङ्खलावलम्बमान-घर्घररव-घोर-घण्टया च घटित-केसरि-सटा-रुचिर-चामरया काञ्चनत्रिशूलिकया लिखित-नभस्तलम्, (१) ( ङ ) इतस्ततः पथिक-पुरुषोपहार-मार्गमिवावलोकयन्तम् (२) महान्तं रक्तध्वजं दूरत एव ददर्श। ( च )

तदभिमुखश्च कञ्चिदध्वानं (३) गत्वा, ( छ ) केतकी-सूचि-षण्ड-पाण्डुरेण

( घ ) परीति। परिणद्धा दण्डायदेशे समन्ताद्‌बद्धा ये वराटकाः कपर्द्दकास्तैर्घटितं निर्म्मितं यत् वुद्‌वुदवदर्द्धचन्द्रखण्डं वुद्‌वुदसमानपीनमध्यकमर्द्धचन्द्राकारभूषणमित्यर्थः तेन खचितं उपरिचिह्नितम्, अतएव सुतस्य निजपुत्रस्य यमस्य यो महिषस्तस्य रक्षणाय अवतीर्णो यो दिनकरः सूर्य्यस्तेन अवतारित आकाशादवरोहितो यः शशी चन्द्रस्तेनेव विराजितं शोभितं शिखरमुपरिभागो यस्य तम्। वराटकघटितार्द्ध-चन्द्राकाराभरणस्य प्रकृतचन्द्रवद्दृश्यमानत्वादिति भावः। अत्र वाक्यार्थहेतुकं काव्यलिङ्गं, तादृशार्द्धचन्द्रे प्रकृतचन्द्रत्वोत्प्रेक्षणात् द्रव्योत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः। अत्र हि चण्डिकायतने प्रत्यहमेव बहुशः प्राणिप्रलयः सम्पद्यन्ते, तेन च महिषवाहनो यमः समागत एव, तत्र च प्राणिनां प्राणहरणाय यमस्य व्यग्रतया तदीयमहिषरक्षणाय पुत्रस्नेहात् सूर्य्योऽप्यवतीर्णः, अवतरता च तेन बन्धुभूतश्चन्द्रोऽप्यवतारित इति कवेराशयः।

( ङ ) दोलायितेति। किञ्च, दोलायितं घण्टान्दोलनात् दोलावच्चलितं यत् त्रिशूलिकाया एव शृङ्गं तत्सङ्गिनी या लोहशृङ्खला तत्र अवलम्बमाना बद्धतया स्थिता घर्घररवा घोरा च घण्टा यस्यां तया, तथा घटितं संयोजितं केसरिसटावत् सिंहजटावत् चामरं यत्र तया, काञ्चनत्रिशूलिकया स्वर्णनिर्म्मितत्रिशाल-त्रिशूलेन, लिखितं संस्पृष्टं नभस्तलं येन तम्। अत्र लुप्तोपमालङ्कारः।

( च ) इत इति। पथिकपुरुषा एवोपहारा बलयस्तेषां मार्गमागमनपथमवलोकयन्तमिव स्थितम्, अस्य रक्तत्वादर्द्धचन्द्राकारकपर्द्दकाभरणस्योन्मीलितनयनरूपत्वाच्चेति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः।

( छ ) तदिति। किञ्च। चन्द्रापीडः तस्य रक्तध्वजस्य अभिमुखः सन्, किञ्चित् कियन्तं अध्वानं

(घ) বুদ্‌বুদের স্থায় স্থূলমধ্য ও অর্দ্ধচন্দ্রের ন্যায় বক্রভাবে সকল দিকে কপর্দ্দক বন্ধন করিয়া সেই ধ্বজটার উপরিভাগ চিহ্নিত করিয়াছিল; সুতরাং বোধ হইতেছিল যে,—সূর্য্য, নিজপুত্র যমের মহিষ রক্ষা করিবার জন্য অবতীর্ণ হইয়া, চন্দ্রকেও অবতীর্ণ করিয়াছিলেন; সেই চন্দ্র দ্বারাই যেন ধ্বজটার উপরিভাগ শোভা পাইতেছিল। (ঙ) ধ্বজের উপরিভাগে স্বর্ণ-নির্ম্মিত বৃহৎ একটা ত্রিশূল,—তাহারই চঞ্চল শৃঙ্গে এক ছড়া লৌহশৃঙ্খল সংলগ্ন, তাহাতে গম্ভীরধ্বনিকারী ও ভয়ঙ্কর একটা ঘণ্টা ঝুলান ছিল এবং সেই ত্রিশূলটায় সিংহের জটার স্থায় সুন্দর একটা চামর বাঁধা ছিল; সেই ধ্বজটা এইরূপ ত্রিশূলদ্বারা আকাশ স্পর্শ করিয়াছিল (চ) এবং সেই ধ্বজটা যেন বলির উপযুক্ত পথিকগণের আগমনের পথ দেখিতেছিল।

(ছ) চন্দ্রাপীড় সেই ধ্বজের অভিমুখ হইয়া কিছু পথ অতিক্রম করিয়া একখানি চণ্ডীর

(१)···नभःस्थलम्। (२) ·आलोकयन्तं। (३) किञ्चिदध्वानं।

वन-द्विरद-दन्त-कपाटेन (१) परिवृताम्, (ज) लोहतोरणेन च रक्त-(२) चामरपरिकरां कालायस-दर्पण-मण्डल-मालां शवर-मुख-मालामिव कपिल-केशभीषणां बिभ्राणेन सनाथीकृतद्वारदेशाम्, (झ) अभिमुखप्रतिष्ठितेन च विनिहितरक्तचन्दनहस्तकतया रुधिरारुण-यम-करतलास्फालितेनेव शोणित-लव-(३) लोभ-लोल-शिवा-लिह्यमान-लोहित-लोचनेन लोह-महिषेणाध्यासिताञ्जनशिला-

पन्थानं गत्वा चण्डिकामपश्यदिति बहुदूरवर्त्तिन्या क्रिययान्वयः। अत्र स्त्रियां द्वितीयैकवचनान्तपदानि चण्डिकामिति वक्ष्यमाणस्य विशेषणानि।

(ज) केतकीति। केतक्याः पुष्पस्य सूचिवच्छवत् अग्रसमूहवत् पाण्डुरेण शुभ्रेण, वनद्विरददन्तस्य वन्यहस्तिनो दन्तस्य कपाटेन, परिवृतामावृताम्। अत्र लुप्तोपमालङ्कारः।

(झ) लोहेति। किञ्च, कपिलैः पिङ्गलवर्णैः केशैर्भीषणा तां, शवराणां व्याधानां मुखमालां वदनश्रेणीमिव, रक्ता लोहितवर्णा चामरावलिः परिकरः परिच्छदो यस्यास्तां, कालं कृष्णं अयो लौहमिति कालायसं "अनम् अश्मन् अयस् सरम् जातिसंज्ञयो"रिति टजादित्वादत्, तस्य यानि दर्पणमण्डलानि, दर्पणाकारवर्त्तुलखण्डानि तेषां मालां श्रेणीं बिभ्राणेन धारयता, लोहतोरणेन लौहनिर्म्मितबहिर्द्वारेण, सनाथीकृतः सहितो द्वारदेशो यस्यास्तामिति चण्डिकामित्यस्य विशेषणम्। अत्र शवरमुखानि कृष्णवर्णानि तत्केशाश्च पिङ्गलवर्णाः, सुतरां शवरमुखमालया सह कालायसदर्पणमण्डलमालायाः तदीयकपिलकेशकलापेन सह रक्तचामरावलेः साद्दश्यमित्युपमालङ्कारः। तथा मालाशब्दस्य द्विरुपादानात् पुनरुक्ततादोषः, स च शवरमुखश्रेणीमिवेति पाठेन समाधेयः।

(ञ) अभीति। किञ्च, विनिहितास्तत्र्यजनैरर्पिताः रक्तचन्दनहस्ता रक्तचन्दनाक्तहस्तचिह्नानि यस्मिन् स तथा तस्य भावस्तया तथोक्तया हेतुना, रुधिरेण अरुणं यद्यमस्य करतलं तेन आस्फालितयाऽलनाय सन्ताडितस्तेनेव, रक्तचन्दनाक्तहस्तचिह्नानां ताड़नकाललग्न-रुधिराक्त-यमहस्तचिह्नवद्दृश्यमानत्वादिति भावः। तथा शोणितलवानां रक्तविन्दूनां लोभेन रक्तचन्दनचिह्नेषु शोणितलवभ्रमात् तत्पानलोभेनेत्यर्थः, लोलाश्चलाः याः शिवाः शृगालास्ताभिर्लिह्यमाने रसनया आस्वाद्यमाने लोहिते रक्तवर्णे लोचने चक्षुषी यस्य तेन। अभिमुखप्रतिष्ठितेन देव्याः सम्मुखस्थापितेन, लोहमहिषेण, अध्यासिता अधिष्ठिता अञ्जनशिलावेदिका कज्जलवत्कृष्णवर्णपाषाणनिर्म्मितवेदिका यस्यास्ताम्। अत्र क्रियोत्प्रेक्षालङ्कारो वृत्त्यनुप्रासश्चानयोः संसृष्टिः। तथा रक्तचन्दनचिह्नेषु शोणितलवभ्रमप्रतीतेर्भ्रान्तिमानलङ्कारो व्यज्यते।

মূর্ত্তি দেখিতে পাইলেন। (জ) কেতকীপুষ্পের অগ্রভাগের ন্যায় শুভ্রবর্ণ ও বন্য হস্তীর দন্তে নির্ম্মিত কপাটদ্বারা সেই চণ্ডীর মন্দির আবদ্ধ ছিল। (ঝ) দ্বারদেশে লৌহময় তোরণ ছিল, তাহাতে ব্যাধগণের পিঙ্গলবর্ণ কেশকলাপে ভয়ঙ্কর মুখশ্রেণীর ন্যায়, রক্তবর্ণ চামরশ্রেণীতে পরিবেষ্টিত ও দর্পণের ন্যায় বর্ত্তুলাকার কতকগুলি কৃষ্ণবর্ণ লৌহখণ্ড সংযোজিত ছিল। (ঞ) দেবীর সম্মুখে কজ্জলতুল্য-কৃষ্ণবর্ণ-প্রস্তর-নির্ম্মিত একটা বেদি ছিল, তাহার উপরে লৌহনির্ম্মিত একটা মহিষ ছিল; তাহার গাত্রে হস্তাকৃতি রক্তচন্দনের চিহ্ন সকল দেওয়া ছিল;

(১) কবাটেন। (২) নবারক্ত...। (৩)...নব...।

वेदिकाम्, ( ञ ) क्वचिद्रक्तोत्पलैः शबरनिपातितानां वनमहिषाणामिव लोचनैः क्वचिदगस्तिकुसुमकुड्मलैः (१) केसरिणामिव करजैः क्वचित् किंशुककुसुमकुड्मलैः शार्दूलानामिव सरुधिरैर्नखरैः कृतपुण्यपुष्पप्रकराम्, (२) ( ट ) अन्यत्राङ्कुरितामिव कुटिल-हरिण-विषाण-कोटि-कूटैः पल्लवितामिव सरस-जिह्वाच्छेदशतैः कुसुमितामिव रक्तनयनसहस्रैः फलितामिव मुण्डमण्डलैरुपहारहिंसां

( ट ) क्वचिदिति। क्वचित् शबरनिपातितानां व्याधव्यापादितानां वनमहिषाणां लोचनैरिव रक्तोत्पलैः, रक्तोत्पलानां महिषलोचनसमानाकृतेरिति भावः, क्वचित् केसरिणां सिंहानां करजैर्नखैरिव अगस्तिकुसुमकुड्मलैः, वकपुष्पमुकुलैः वकपुष्पमुकुलानां सिंहनखतुल्याकृतिमत्त्वादिति भावः, क्वचिच्च शार्दूलानां व्याघ्राणां सरुधिरैर्नखरैरिव किंशुककुसुमकुड्मलैः पलाशपुष्पमुकुलैः, किंशुककुसुमकुड्मलानामपि व्याघ्रनखतुल्याकृतेरिति भावः, तत्कुड्मलानां रक्तत्वात् साम्यप्रतिपादनाय सरुधिरैरिति विशेषणम्, कृतः पुण्यः पवित्रः पुष्पप्रकरः कुसुमोपहारो यस्यास्ताम्। अत तिसृणामेव श्रौतीपमानां मिथोनिरपेक्षतया संसृष्टिः। तथा कुसुमकुड्मलैरित्यस्य द्विरुपादानात् पुनरुक्ततादोषः, स चैकत पुष्पमुकुलैरिति पाठेन समाधेयः। हिंसाप्रधानायतनत्वात् हिंसासूचकोपमानोपादानमिति बोध्यम्।

( ठ ) अन्यत्रेति। अन्यत्र अन्यस्मिन्नंशे, कुटिलानि वक्राणि यानि हरिणानां विषाणानि शृङ्गाणि तेषां कोटयः अग्रदेशास्तेषां कूटैः राशिभिः हरिणहत्यापूर्वकस्थापितैरित्यर्थः, अङ्कुरितां सञ्जाताङ्कुरामिव, तद्विषाणकोटिकूटानामङ्कुरवद्दृश्यमानत्वादिति भावः। सरसा आर्द्रा रक्ताक्ता ये जिह्वाच्छेदा रसनाखण्डानि तेषां शतैः समूहैः पल्लवितां सञ्जातपल्लवामिव, जिह्वाखण्डानां पल्लवतुल्यत्वादित्याशयः। रक्तनयनसहस्रैः रक्तवर्णलोचनसमूहैः कुसुमितां सञ्जातपुष्पामिव, रक्तलोचनानामपि कुसुमसमानत्वादित्यभिप्रायः। मुण्डमण्डलैर्मस्तकनिकरैः फलितां सञ्जातफलामिव, तेषां फलतुल्याकृतेरिति भावः। उपहाराणां उपायनीभूतानां प्राणिणां हिंसां दर्शयन्तीं प्रकटयन्तीम्; हिंसापूर्वकं विषाणकोटिकूटादीनां विकीर्णत्वादिति भावः। अत्राङ्कुरादीनां जननोत्प्रेक्षणात् चतस्र एव क्रियोत्प्रेक्षास्तासाञ्चाङ्गाङ्गिभावेन सङ्करः। तथा सर्वा एवाभेदे तृतीयास्तथा च विषाणकोटिकूटादिरूपाङ्कुरादिप्रतीतेरुपहारहिंसाया लतारूपत्वप्रतीतेश्च साङ्गरूपकालङ्कारो व्यज्यते।

তাহাতে বোধ হইতেছিল যে,—যম যেন তাহাকে চালাইবার জন্য রক্তাক্ত হস্তে তাড়ন করিয়াছিলেন; আর রক্তবিন্দুর লোভে চঞ্চল শৃগালগণ, তাহার নয়নযুগল লেহন করিতেছিল। ( ট ) কোন স্থানে ব্যাধ-নিহত বন্য-মহিষের ন্যায় রক্তোৎপল, কোন স্থানে সিংহনখের ন্যায় বকপুষ্পের কলিকা এবং কোন স্থানে রক্তাক্ত ব্যাঘ্র-নখের ন্যায় পলাশপুষ্পের কলিকা বিক্ষেপ করিয়া পবিত্র পুষ্পবিক্ষেপের কার্য্য সম্পাদন করিয়াছিল। ( ঠ ) অন্য কোন স্থানে দেবী, উপহারভাবে প্রদত্ত পশুদিগের হিংসা দেখাইতেছিলেন; হরিণগণের বক্র শৃঙ্গাগ্ররাশিতে সেই হিংসার যেন অঙ্কুর জন্মিয়াছিল, রক্তাক্ত জিহ্বাখণ্ডসমূহে তাহার যেন পল্লব হইয়াছিল, রক্তবর্ণ নয়নপুঞ্জে যেন পুষ্প উৎপন্ন

(१) अगस्तिकुड्मलैः। (२)...प्रकरोपहाराम्।

दर्शयन्तीम्, ( ठ ) शाखान्तराल-निरन्तर-निलीन-(१) रक्त-कुक्कुट-कुलैः स्वभयात् (२) अकाल-दर्शित-कुसुम-स्तवकैरिव रक्ताशोकविटपैर्विभूषिताङ्गनाम्, ( ड ) बलि-रुधिर-पान-तृष्णया समागतैश्च वेतालैरिव तालैर्दीयमान-फलमुण्डोपहाराम्, ( ढ ) शङ्काज्वर-कम्पितैरिव कदलिकावनैर्भयोत्कण्ठितैरिव श्रीफलतरुषण्डैस्त्रासोर्द्ध्वकेशैरिव खर्जूरवनैः समन्ताद् गहनीकृताम्, ( ण ) विदलित-वन-करि-कुम्भ-विगलित-मुक्ताफलानि रुधिरारुणानि बलि-सिक्थ-(३)

( ड ) शाखेति। स्वभयात् कुक्कुरभयात् शाखान्तरालेषु निरन्तरं निलीनानि घनं निभृतभावेनावस्थितानि रक्तकुक्कुटकुलानि येषु तैः, अतएव अकाले दर्शिताः कुसुमस्तवका यैस्तैरिव स्थितैः, रक्तकुक्कुटकुलानामिव कुसुमस्तवकतुल्यत्वादिति भावः, रक्ताशोकानां विटपैर्विशालशाखाभिः विभूषितं अङ्गनं चत्वरं यस्यास्ताम्। अत्र क्रियोत्प्रेक्षालङ्कारः।

( ढ ) बलीति। किञ्च, बलीनामुपहारीभूतप्राणिनां रुधिरपानतृष्णया समागतैर्वेतालैर्भूतविशेषैरिव तालैस्तालवृक्षैः, दीयमानाः फलान्येव मुण्डानि तेषामुपहारा यस्यै ताम्, तालफलानां मुण्डसमानाकृतेरिति भावः। अत्र जात्युत्प्रेक्षानिरङ्गकेवलरूपकयोरङ्गाङ्गिभावेन सङ्करः।

( ण ) शङ्केति। शङ्काज्वरेण पशुवधदर्शनात् स्ववधातङ्कतापेन कम्पितैरिव, वायुना कम्पनादिति भावः, कदलिकावनैः रम्भाकाननैः। भयोत्कण्ठितैरिव भयोत्कण्ठाजनितरोमाञ्चतुल्यकण्टकराशिदर्शनादित्याशयः, श्रीफलतरुषण्डैर्बिल्ववृक्षसमूहैः। तथा त्रासोर्द्ध्वकेशैरिव, ऊर्द्ध्वपत्रनिकराणां भयेन ऊर्द्ध्वीभूतकेशवद्दृश्यमानत्वादित्यभिप्रायः, खर्जूरवनैः, समन्ताद्गहनीकृतां सर्वतो निविडीकृताम्। अत्र प्रथमा द्वितीया च क्रियोत्प्रेक्षा तृतीया तु गुणोत्प्रेक्षा, आसाञ्च मिथोनिरपेक्षतया संसृष्टिः।

( त ) विदलितेति। बलिसिक्थेषु पूजोपहारीभूतान्नेषु रक्तान्नेष्वित्यर्थः लुब्धा लोभवन्तः, मुग्धा मुक्ताफलेषु बलिसिक्थभ्रमान्मूढा ये कृकवाकवः कुक्कुटास्तैरादौ ग्रस्तानि बलिसिक्थभ्रमादेव कवलितानि अन-

হইয়াছিল এবং মুণ্ড-সমূহে যেন ফল জন্মিয়াছিল। ( ড ) কতকগুলি রক্তবর্ণ অশোকবৃক্ষ দেবীর প্রাঙ্গণভূমি অলঙ্কৃত করিয়া রহিয়াছিল; কুকুরের ভয়ে বহুতর রক্তবর্ণ বনকুকুড়া সেই অশোকবৃক্ষের ক্ষুদ্র ক্ষুদ্র শাখার ভিতরে ঘনভাবে লুকাইয়াছিল, তাহাতে প্রতীতি হইতেছিল যে,—সেই অশোকবৃক্ষের বৃহৎ বৃহৎ শাখাগুলি যেন অকালে পুষ্পস্তবক সকল প্রকাশ করিয়াছে। ( ঢ ) বলির রক্ত পান করিবার ইচ্ছায় সমাগত বেতালগণের ন্যায় তালবৃক্ষ-সমূহ, ফলস্বরূপ মুণ্ড সকল উপহার দিতেছিল। ( ণ ) কদলীবন যেন আতঙ্কে কম্পিত হইতেছিল, বিল্ববৃক্ষগুলি যেন ভয়ে উৎকণ্ঠিত হইয়াছিল, আর ভয়বশতঃ খর্জ্জুরবনের কেশগুলি যেন উচু হইয়াছিল—এই অবস্থায় সেই বনসমূহ, দেবীর প্রাঙ্গণভূমিকে ব্যাপ্ত করিয়া রহিয়াছিল। ( ত ) সিংহবিদারিত বন্য হস্তীর কুম্ভ হইতে রক্তাক্ত মুক্তাসমূহ নির্গত হইয়া পড়িয়া রহিয়াছিল, সেগুলিকে পূজার অন্ন মনে করিয়া লোভী বনকুকুড়াগুলি, প্রথমে গ্রাস করিয়া পরে ছাড়িয়া

(१) शाखान्तरालनिलीन...। (२)...कुक्कुटकुलैर्भयात्...।
(३) . वनकरिकुम्भविदलितमुक्ताफलानि, विदलितवनकरिकुम्भविगलितरक्तमुक्ताफलानि नवरुधिरारुणबलि...।]

लुब्ध-मुग्ध-ध्वाङ्क्षवाङ्क्ष-ग्रस्तमुक्तानि विकिरद्भिरम्बिकापरिग्रहदुर्ललितैः क्रीडद्भिः केशरि-किशोरकैरशून्योद्देशाम्, (त) प्रभूत-रुधिर-दर्शनोद्भूत-मूर्च्छा-पतितेनेव प्रतिबिम्बितेनास्तताम्रेण सवित्रा ताम्रतरीकृतैः (१) क्षतज-जल-प्रवाहैः (२) पिच्छिलीकृताजिराम्, (थ) अवलम्बमान-दीप-धूप-(३) रक्तांशुकेन ग्रथित-शिखि-गल-वलयावलिना पिष्ट-पिण्ड-पाण्डुरित-(४)-घन-घण्टा-मालभारिणा (५) त्रापुष-सिंह-मुख-मध्य-स्थित-स्थूल-लोह-कण्टकं दत्त-(६) दन्त-दण्डार्गलं लसत्-

न्तरं मुक्तानि काठिन्यप्रतीतेः परित्यक्तानि, रुधिरारुणानि रक्ताक्ततया अरुणवर्णानि, विदलितेभ्यो विदारितेभ्यः करिकुम्भेभ्यः विगलितानि यानि मुक्ताफलानि मौक्तिकानि तानि, विकिरद्भिः शोणिताक्ततया लोभादगृहीत्वा मांसाभावात् पुनर्विक्षिपद्भिरित्यर्थः, अम्बिकायाश्चण्डिकायाः परिग्रहेण वाहनसजातीयतया ग्रहणेन दुर्ललितैः हिंसनाभावाद्दुर्दान्तीभूतैः, क्रीडद्भिः खेलद्भिः, केशरिकिशोरकैः सिंहशावकैः अशून्यः अविरहित उद्देशः स्थानं यस्यास्ताम्। अत्र ध्वाङ्क्षवाङ्क्षूणां मुक्ताफलेषु बलिसिक्थभ्रमाद्भ्रान्तिमानलङ्कारः केशरिकिशोरकैरिति छेकानुप्रासेन संसृज्यते।

(थ) प्रभूतेति। प्रभूतरुधिरदर्शनेन उद्भूता उत्पन्ना या मूर्च्छा तया पतितेनेव, प्रतिबिम्बितेन क्षतजजलप्रवाहेष्वेव संक्रान्तमूर्त्तिना, अस्ते अस्तसमये ताम्रस्ताम्रवर्णस्तेन, सवित्रा सूर्य्येण, ताम्रतरीकृतैर्विशेषेण ताम्रवर्णीकृतैः, क्षतजानि रुधिराण्येव जलानि क्षतजानि जलानीवेति वा तेषां प्रवाहैः, पिच्छिलीकृतं क्लिन्नीकृतं अजिरं चत्वरं यस्यास्ताम्। अत्र क्रियोत्प्रेक्षालङ्कारः, तथा क्षतजजलेति रूपकोपमयोः सन्देहसङ्करः, तयोश्च परस्परनैरपेक्ष्यात् संसृष्टिः। तथात्र रुधिरस्य जलत्वेन रूपणे जलेनौपम्ये वा न कश्चिद्विशेष इत्यपुष्टार्थतादोषः, स च जलपदपरित्यागेनैव समाधेयः।

(द) अवेति। अवलम्बमानानि अवतिष्ठमानानि दीपधूपरक्तांशुकानि यस्मिन् तेन, ग्रथिता गुम्फिता शिखिगलवलयानां मयूरकण्ठमण्डलानां आवलिर्माला यत्र तेन, पिष्टपिण्डेन तण्डुलचूर्णपिण्डेन पाण्डुरिताः शुभ्रवर्णीकृताः घना निरन्तराः या घण्टास्तासां मालां बिभर्त्तीति तेन, "थाकारी स्त्रीकृती ह्रस्वी" इति ह्रस्वः।

দিয়াছিল, এদিকে দেবীর পক্ষভুক্ত বলিয়া হিংসা না করায় দুর্দ্দান্ত সিংহশাবকগণ সেই মুক্তাগুলিকে নিক্ষেপ করিয়া খেলা করতঃ দেবীর প্রাঙ্গণে বিচরণ করিতেছিল। (থ) জলের ন্যায় রক্তের প্রবাহ দেবীর প্রাঙ্গণকে পিচ্ছল করিয়াছিল; অস্তকালীন তাম্রবর্ণ সূর্য্য সেই রক্তের প্রবাহে প্রতিবিম্বিত হইয়া তাহাকে আরও তাম্রবর্ণ করিয়াছিলেন, তাহাতে বোধ হইতেছিল যে, প্রচুর রক্ত দর্শনে মূর্চ্ছা উপস্থিত হওয়ায়ই যেন সূর্য্য পড়িয়া গিয়াছিলেন। (দ) অভ্যন্তরস্থ গৃহের দ্বারদেশ দ্বারা দেবী শোভা পাইতেছিলেন, সেই দ্বারদেশে দুই পাট কপাট ছিল; তাহাতে ধূপ, দীপ ও রক্তবস্ত্র ঝুলান ছিল, ময়ূরের কণ্ঠমালা গাঁথা ছিল, তণ্ডুলচূর্ণে শুভ্রবর্ণ ঘন ঘন ঘণ্টার মালা দুলিতেছিল, সীসার একটা সিংহ

(१) अम्बरीकृतैः। (२) क्षतजलप्रवाहैः। (३)…दीपधूम…। (४) पिष्टपाण्डुरित…।
(५)…मालाभारिणा। (६)…कण्टकदत्त…।

पीत-(१) नील-लोहित-दर्पण-स्फुरित-बुद्बुदमालं कपाट पट्टद्वयं (२) दधानेन गर्भगृहद्वारदेशेन दीप्यमानाम्, (द) अन्तःपिण्डिकापीठपातिभिश्च सर्वपशु-जीवितैरिव शरणमुपागतैरलक्तक-रस-रक्त-पटैरविरहित-चरण-मूलाम्, (ध) पतित-कृष्णचामरप्रतिबिम्बानाञ्च शिरश्छेदलग्न-केशजालकानामिव परशुपट्टिशप्रभृतीनां जीवविशसनशस्त्राणां प्रभाभिर्बहलान्धकारतया पातालगृहवासिनीं (३)

---

त्रपुषः सीसकस्यायमिति त्रापुषः सीसकनिर्म्मितो यः सिंहस्य मुखमध्ये स्थितं स्थूलं लोहकण्टकं यस्मिन् तत्, दत्तं दन्तदण्डो हस्तिदन्तदण्ड एव अर्गलं यस्मिन् तत्, तथा लसत्सु सम्मुखे दीप्यमानेषु पीतेषु नीलेषु लोहितेषु च दर्पणेषु स्फुरिता प्रतिबिम्बिता बुद्बुदमाला बुद्बुदतुल्यवर्त्तुललौहशङ्कुश्रेणी यस्मिन् तत् तादृशं कपाटपट्टद्वयं कपाटफलकयुगलं दधानेन, गर्भगृहस्य अन्तर्गृहस्य द्वारदेशेन, दीप्यमानां शोभमानाम्।

(ध) अन्तरिति। किञ्च, अन्तर्म्मध्ये या पिण्डिका वेदिः तस्याः यत्पीठं तत्र पतन्तीति तैः, शरणमुपागतैः सर्वेषां पशूनां जीवितैरिव, तेषामपि रक्तसम्बन्धेन रक्तत्वसम्भवादिति भावः, अलक्तकरसेन रक्ता ये पटास्तैः, अविरहितं चरणयोर्मूलं समीपं यस्यास्ताम्। अत्र काव्योत्प्रेक्षालङ्कारः।

(न) पतितेति। किञ्च, पतितानि कृष्णचामराणां प्रतिबिम्बानि येषु तेषां, अतएव शिरश्छेदे सति लग्नं केशजालं येषु तेषामिव दृश्यमानानां, कृष्णचामरप्रतिबिम्बानामेव केशजालवद्दृश्यमानत्वादिति भावः, परशुः प्रसिद्धः, पट्टिशस्तु "पट्टिशो लोहदण्डो यस्तीक्ष्णधारः क्षुरोपमः।" इति वैजयन्त्युक्तः, तत्प्रभृतीनां जीवविशसनशस्त्राणां प्राणिहिंसाशस्त्राणां, प्रभाभिर्बहुल उत्पादितः, बहलः प्रचुरः अन्धकारो यत्र गृहे तस्य भावस्तया हेतुना, पातालगृहवासिनीमिवोपलक्ष्यमाणाम्। अत्र केशजाललग्नक्रियोत्प्रेक्षणात् प्रथमा पातालगृहवासोत्प्रेक्षणाद्द्वितीया च क्रियोत्प्रेक्षैव, तयोश्च परस्परनिरपेक्षतया संसृष्टिः।

---

ছিল, তাহার মুখের ভিতর মোটা একটা লোহার পেরেক ছিল, হস্তিদন্তের অর্গল দেওয়া ছিল, এবং সেই কপাটে বুদ্বুদের ন্যায় বর্ত্তুলাকার কতকগুলি পেরেক মারা ছিল, সম্মুখবর্ত্তী পীতবর্ণ, নীলবর্ণ ও রক্তবর্ণ দর্পণে সেই পেরেকগুলির প্রতিবিম্ব পড়িয়াছিল। (ধ) ঘরের ভিতরে দেবীর চরণের নিকটে একটা বেদি, তাহার উপরে একখানা পীড়ি, তাহার উপরে আবার আলতার রসে রঞ্জিত একখানা কাপড় পাতা ছিল; তাহাতে বোধ হইতেছিল যে, সমস্ত পশু-দিগের জীবন আসিয়া যেন শরণাগত হইয়া রহিয়াছে। (ন) ঘরের ভিতরে পরশু ও পট্টিশ প্রভৃতি কতকগুলি জীবিহত্যা করিবার অস্ত্র ছিল, তাহার উপরে কৃষ্ণবর্ণ চামরের প্রতিবিম্ব পড়িয়াছিল, তাহাতে বোধ হইতেছিল যে, শিরশ্ছেদ হইয়া গেলে তাহার কেশকলাপই যেন সেই অস্ত্রগুলিতে লাগিয়া রহিয়াছে; এই জাতীয় অস্ত্রের প্রভায় ঘরের ভিতরে প্রচুর অন্ধকার হইয়াছিল বলিয়া দেবীকে পাতালগৃহবাসিনীর ন্যায় দেখা যাইতেছিল। (প) দেবীর গলদেশে

---

(१) गलत्पीत...। (२) कपाटपटद्वयं। (३) पातालनिवासिनीं।

द्रवोपलक्ष्यमाणाम् (न) रक्तचन्दन-खचित-स्फुरत्-फल-पल्लव-कलितैश्च बिल्व-पत्रदामभिः (१) बालकमुण्डप्रालम्बैरिव कृतमण्डनाम् (प) शोणित-ताम्र-(२) कदम्ब-स्तबक-कृतार्चनैश्च पशूपहार-पटह-पटु-रटित-रसोल्लासितरोमाञ्चैरिवाङ्गैः (३) क्रूरतामुद्वहन्तीम्, (फ) चारु-चामीकर-पट्ट-(४) प्रावृतेन च ललाटेन शबर-सुन्दरी-रचित-सिन्दूर-तिलक-बिन्दुना दाड़िम-(५) कुसुम-कर्णपूर-प्रभा-सेक-लोहितायमान-कपोलभित्तिना रुधिर-ताम्बूलारुणिताधरपुटेन भ्रूकुटि-कुटिल-

---

(प) रक्तेति। किञ्च, रक्तचन्दनेन खचिता रञ्जिता अतएव स्फुरन्ती दीप्यमाना ये बिल्वस्यैव फल-पल्लवास्तैः कलिताः संयोजितास्तैः, अतएव बालकमुण्डानां प्रालम्बैः सरललम्बिनीभिर्मालाभिरिव स्थितैः, बिल्वपत्राणां दामभिर्मालाभिः कृतमण्डनां विहितभूषणाम्। अत्र जात्युत्प्रेक्षालङ्कारः। बालकमुण्डगत-रक्तसाम्यप्रतिपादनार्थं रक्तचन्दनखचितपदम्। बालकपदन्तु तन्मुण्डानामापेक्षिकक्षुद्रतया बिल्वफलसाम्यद्योतनार्थम्।

(फ) शोणितेति। किञ्च, शोणितेन रक्तसंसर्गेण ताम्रा ये कदम्बस्तबकाः कदम्बपुष्पगुच्छास्तैः कृतं अर्चनं येषां तैः संलग्नकदम्बकुसुमरेणुभिरित्यर्थः, अतएव पशूपहारे पशुबलिदानसमये पटहस्य ढक्काया यत् पटुरटितं उच्चशब्दस्तस्य रसेन श्रवणोत्साहेन उल्लसन्ति उद्गच्छन्तीति ते तथोक्ता रोमाञ्चा येषु तैरिव, अङ्गैः, क्रूरतां रौद्रतां उद्वहन्तीं धारयन्तीम्। अत्र रोमाञ्चोद्गमोत्प्रेक्षणात् क्रियोत्प्रेक्षा छेकानु-प्रासयानयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

(ब) चार्विति। किञ्च, चारुः सुन्दरो यश्चामीकरपट्टः स्वर्णफलकं तेन प्रावृतमाच्छादितं तेन, तथा शबरसुन्दरीभिः रचितः कृतः सिन्दूरतिलकबिन्दुर्यत्र तेन तादृशेन ललाटेन। दाड़िमकुसुमे एव कर्णपूरौ तयोः प्रभायाः सेकेन संसर्गेण लोहितायमाने कपोलभित्ती गण्डयुगलं यस्य तेन, रुधिरताम्बूलाभ्यां अरुणितं रक्तवर्णीकृतं अधरपुटं यस्य तेन, तथा भ्रुकुट्या भ्रूभङ्गेन कुटिले वक्रे बभ्रुणी पिङ्गलवर्णे नयने चक्षुषी यस्य तेन

---

কতকগুলি বিল্বপত্রের মালা দিয়া অলঙ্কার করা হইয়াছিল, তাহাতে রক্তচন্দন-রঞ্জিত সুন্দর বহুতর বিল্বফল ও বিল্বপল্লব সংযোজিত ছিল; সুতরাং সেই মালাগুলিকে বালকের মুণ্ডমালার ন্যায় বোধ হইতেছিল। (ফ) রক্তে রক্তবর্ণ কদম্বপুষ্পের রেণুদ্বারা দেবীর অঙ্গে পূজা করিয়াছিল, তাহাতে প্রতীতি হইতেছিল যে,—পশু বলিদান করিবার সময়ে ঢক্কার উচ্চ শব্দ শ্রবণে উৎসাহবশতঃ দেবীর সমস্ত অঙ্গে যেন রোমাঞ্চ উদ্গত হইয়াছে; সুতরাং সেই অঙ্গসমূহ দ্বারা দেবী ভয়ঙ্করতা ধারণ করিতেছিলেন। (ব) দেবীর ললাটদেশ, সুন্দর একখানি স্বর্ণফলকে আবৃত ছিল এবং শবররমণীগণ তাহাতে ক্ষুদ্র একটি সিন্দূরের তিলক দিয়াছিল; কর্ণযুগলে দাড়িম্বপুষ্পের দুইটি কর্ণপূর ছিল, তাহার প্রভায় কপোলযুগল রক্তবর্ণ হইয়াছিল; রক্তসংস্রবে ও তাম্বূলের রসে ওষ্ঠযুগলকে অরুণবর্ণ করিয়াছিল, স্বভাবতই পিঙ্গলবর্ণ নয়নযুগল

---

(१) बिल्वदामभिः। (२) शोणितताम्र...। (३)...चाङ्गैः। (४)...पट...।
(५) दाड़िमी...।

भ्रू-नयनेन (१) मुखेन कुसुम्भ-पाटलित-दुकूल-कल्पितया च देहलतया महाकालाभिसारिकावेश-विभ्रमं बिभ्रतीम्, (ब) सम्पिण्डित-नील-गुग्गुलु-(२) धूप-धूमारुणी-कृताभिश्च प्रचलन्तीभिर्गर्भगृहदीपिकालताभिरङ्गुलीभिरिव महिषासुर-शोणित-लवालोहिनीभिः स्कन्धपीठ-कण्डूयन-चलित-त्रिशूलदण्ड-कृतापराधं वनमहिषमिव तर्जयन्तीम्, (भ) प्रलम्ब-(३) कूर्चधरैश्छागैरपि धृतव्रतैरिव, स्फुरदधरपुटैराखुभिरपि जपपरैरिव, कृष्णाजिनप्रावृताङ्गैः कुरङ्गैरपि प्रति-

ताडशेन मुखेन। तथा कुसुम्भेन रञ्जनद्रव्यविशेषेण पाटलितं श्वेतरक्तीकृतं यत् दुकूलं वस्त्रं तेन कल्पितया आवृतया देहलतया च करणेन, महाकालस्य अभिसारिकावेशविभ्रमं बिभ्रतीं धारयन्तीमिव स्थिताम्। अत्र प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः।

(ब) सम्पिण्डितेति। किञ्च, सम्पिण्डितः पुञ्जीभूतो यो नीलगुग्गुलुधूपयोर्धूमस्तेन अरुणीकृताभिः, प्रचलन्तीभिर्वायुभरात् कम्पमानाभिः, गर्भगृहस्य अन्तर्गृहस्य दीपिकालताभिः वायुवशात् प्रचलनेनैव लतावल्लम्बमानैर्भूरैर्दीपैः, महिषासुरस्य शोणितलवैः रक्तबिन्दुभिः आलोहिन्यः आरक्ताभिरङ्गुलीभिरिव स्थिताभिः सतीभिः, स्कन्धपीठस्य स्कन्धदेशस्य कण्डूयनेन चलितो यस्त्रिशूलदण्डस्तेन कृतः अपराधो येन तं वनमहिषं तर्जयन्तीमिव स्थिताम्। चूर्णहरिद्राभ्यां रञ्जनेनारुणवर्णवत् नीलेनापि गुग्गुलुधूपयोर्धूमेनारुणवर्णो जायते संयुक्तद्रव्यस्वभाववैचित्र्यादिति बोध्यम्। अतएवात्र कारणविरुद्धकार्योत्पत्तेर्विषमालङ्कारः, तथा प्रथमा जात्युत्प्रेक्षा द्वितीया च क्रियोत्प्रेक्षा, द्वयोरेतेषामङ्गाङ्गिभावेन सङ्करः। देवीमन्दिरस्यारण्यान्तर्गततया वनमहिषप्रवेशसम्भव इति ज्ञेयम्।

(भ) प्रलम्बेति। अन्येषु का कथा, प्रलम्बकूर्चधरैर्दीर्घश्मश्रुधरैश्छागैरपि धृतव्रतैर्गृहीततपोनियमैः सद्भिराराध्यमानामिव, प्रलम्बकूर्चधरत्वादिति भावः। स्फुरन्ति स्पन्दमानानि अधरपुटानि येषां तैः, आखुभिरुन्दुरुभिरपि जपपरैर्मन्त्रजपप्रवृत्तैः सद्भिराराध्यमानामिव, जपप्रवृत्तवत् स्फुरदधरपुटत्वादित्याशयः। अधरपुट-

भ্রূকুটি করায় বক্র হইয়াছিল ; আর কুসুমফুলের রসে রঞ্জিত বস্ত্রদ্বারা দেহলতা আবৃত ছিল — এই সকল কারণে দেবী যেন মহাকালের প্রতি অভিসারিকার বেশবিলাস ধারণ করিতেছিলেন। (ভ) ঘরের ভিতরে কতকগুলি প্রদীপ ছিল, গুগ্‌গুলু ও ধূপের নীলবর্ণ ধূমপুঞ্জে সেই প্রদীপগুলিকে অরুণবর্ণ করিয়াছিল এবং সেই প্রদীপগুলি বায়ুভরে চলিতে থাকিয়া লতার ন্যায় লম্বমান হইতেছিল ; তাহাতে সেই প্রদীপগুলিকে মহিষাসুরের রক্তবিন্দুতে লোহিতবর্ণ অঙ্গুলীর ন্যায় দেখা যাইতেছিল ; এদিকে একটা বন্য মহিষ স্কন্ধ কণ্ডূয়ন করায় ত্রিশূলটা কাঁপিতেছিল বলিয়া সে, অপরাধ করিয়াছিল ; তাই দেবী যেন অঙ্গুলীর ন্যায় সেই প্রদীপগুলি দ্বারা মহিষটাকে তর্জ্জন করিতেছিলেন। (ম) দীর্ঘশ্মশ্রুধারী ছাগগণও যেন ব্রতাবলম্বন করিয়া দেবীর আরাধনা করিতেছিল ; ওষ্ঠযুগল অবিশ্রান্ত স্পন্দিত হওয়ায় মূষিকগণও যেন জপে প্রবৃত্ত হইয়া

(१) भ्रुकुटिकुटिलभ्रूणा रक्तनयनेन, भ्रकुटिकुटिलभ्रूणा रक्तनयनेन, भ्रुकुटि...।
(२)...गुग्गुल...। (३) प्रबल...।

शयितैरिव (१) ज्वलित-लोहित-मूर्द्ध-रत्न-रश्मिभिः कृष्णसर्पैरपि शिरो-धृत-मणिदीपकैरिवाराध्यमानाम्. (म) सर्वतः कठोरवायसगणेन च रटता (२) स्तुतिपरेणेव स्तूयमानाम्, (य) स्थूलस्थूलैः शिराजाल-कैर्गोधा-गोधिका-(३) कृकलासकुलैरिव दग्धस्थाणुशाशङ्कया समारूढैर्गवाक्षि-तेन (र) अलक्ष्मी-समुत्खात-लक्षण स्थानैरिव विस्फोटव्रणविन्दुभिः कल्माषित-

स्फुरणं मूषिकाणां स्वभावः। कृष्णाजिनं कृष्णवर्णं स्वकीयं चर्म्म कृष्णसारचर्म्म च तेन प्रावृतमङ्गं येषां तैः कुरङ्गैर्हरिणैरपि प्रतिशयितैः कृतप्रतिशयनैः भक्तिराराध्यमानामिव, तद्वत् कृष्णाजिनप्रावृताङ्गत्वादित्यभिप्रायः। विपत्प्रतीकाराय अभीष्टलाभाय वा दिनमासादिनियतं भोजनादिपरित्यागपूर्वकं देवतायै शयनं प्रतिशयनम्। तथा ज्वलिता दीप्ताः, लोहिता रक्तवर्णाः, मूर्द्धरत्नस्य शिरोमणे रश्मयः किरणा येषां तैः, कृष्णसर्पैर्विजातीय-विषधरैरपि शिरःसु धृता मणय एव दीपा मणिवह्नीपाय येस्तैः भक्तिराराध्यमानामिव, शिरःसु दीपधारणादिति भावः। अन्योऽपि शिरसि दीपधारणपूर्वकं देवतामाराध्नोति। अत्र प्रत्येकवाक्य एव क्रियोत्प्रेक्षालङ्कारः, तथा आराध्यमानामित्येकया क्रियया बहूनां कर्तृतयाभिसम्बन्धात्तुल्ययोगिता चानयोरङ्गाङ्गिभावेन सङ्करः। तेन च महोपासनास्थानत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

(य) सर्वत इति। किञ्च, सर्वतः समन्तात् रटता रुवता, कठोरः कर्कशस्वरो यो वायसगणः काक-समूहस्तेन, स्तुतिपरेण स्तवप्रवृत्तेन सता स्तूयमानामिव, स्तुतिप्रवृत्तवत् सर्वतोरवणात्। स्तुतिप्रवृत्तस्य प्रादक्षिण्येन भ्रमणपूर्वं स्तवरवं करोति। अत्रापि क्रियोत्प्रेक्षालङ्कारः।

(र) स्थूलेति। दग्धो यः स्थाणुः शाखापत्रविहीनो वृक्षस्तस्य आशङ्कया भ्रमेण समारूढैर्गात्रारूढैः, गोधागोधिकाकृकलासकुलैरिव, स्थूलस्थूलैरपरापरापेक्षया अतीवस्थूलैः शिराजालकैर्धमनीसमूहैः, गवाक्षमस्य सञ्जातमिति गवाक्षितस्तेन जालकमयीभूतेन जरद्द्रविडधार्म्मिकेणाधिष्ठितामिति बहुदूरवर्त्तिन्या क्रिययान्वयः। अत्र भ्रान्तिमान् जात्युत्प्रेक्षा चालङ्कारस्तयोश्चाङ्गाङ्गिभावेन सङ्करः। इतः पुंसि तृतीयैकवचनान्तपदानि जरद्द्रविडधार्म्मिकेणेति वक्ष्यमाणस्य विशेषणानि।

(ल) अलक्ष्मीति। अलक्ष्म्या देव्या समुत्खातानि समूलमुत्पाटितानि यानि लक्षणानि शुभचिह्नानि तेषां स्थानैरिव विस्फोटव्रणविन्दुभिः कल्माषितं विचित्रीकृतं सकलं शरीरं यस्य तेन। अत्र जात्युत्प्रेक्षालङ्कारः।

দেবীর উপাসনা করিতেছিল ; কৃষ্ণাজিনে সমস্ত অঙ্গ আবৃত করিয়া হরিণগণও যেন প্রতিশয়ন করিয়া (হত্যা দিতে আরম্ভ করিয়া) দেবীর আরাধনা করিতেছিল এবং মস্তকমণির রক্তবর্ণ কিরণজাল জ্বলিতে থাকায় কৃষ্ণসর্পগণও যেন মস্তকে মণিপ্রদীপ ধারণ করিয়া দেবীর উপাসনা করিতেছিল। (য) সকল দিকে রব করতঃ কর্কশস্বর কাকগণও যেন স্তবে প্রবৃত্ত হইয়া আরাধনা করিতেছিল। (র) দ্রবিড়দেশীয় বৃদ্ধ একটা উপাসক দেবীর আয়তনে অধিষ্ঠান করিতেছিল ; দগ্ধ স্থাণু মনে করিয়া গাত্রে আরূঢ় গুইল, গোসাপ ও কাঁকলাস সমূহের ন্যায় অত্যন্ত স্থূল শিরাসমূহ থাকায় তাহার গাত্রে গবাক্ষজাল জন্মিয়াছিল। (ল) অলক্ষ্মীদেবী শুভলক্ষণসমূহ উন্মূলন করিয়া ফেলিয়াছিলেন, তাহার স্থানের ন্যায় বিস্ফোটব্রণবিন্দুতে তাহার

(১) प्रतिशयनैरिव। (२) रुवता। (३) गोधार…, गोधागोधिका…।

सकल-शरीरेण, (ल) कर्णावतंससंस्थापितया च चूड़या रुद्राक्षमालिकामिव (१) दधानेन, (व) अम्बिका-पाद-पतन-श्याम-ललाट-वर्द्धमानार्बुदेन, (२) (श) कुवादि-(३) दत्त-सिद्धाञ्जनदानस्फुटितैक-(४) लोचनतया त्रिकालमितरलोचनाञ्जनदानादर-श्लक्ष्णीकृत-दारुशलाकेन, (ष) प्रत्यहं कटुकालावु-स्वेद-प्रारब्ध-दन्तुरता-प्रतीकारेण, (स) कथञ्चिदस्थान-दत्तेष्टका-प्रहारतया शुष्कैक भुजोप-

(व) कर्णेति। किञ्च, कर्णावतंसे कर्णभूषणस्थाने संस्थापितया चूड़या हेतुना, रुद्राक्षमालिकां दधानेनेव, शिखिपुच्छनिर्म्मितायास्तस्याश्चूड़ायाः कण्ठपर्य्यन्तपातित्वेन रुद्राक्षमालावत् प्रतीतिरिति भावः। क्रियोत्प्रेक्षा।

(श) अम्बिकेति। अम्बिकायाः पादपतनेन श्यामे श्यामीभूते ललाटे वर्द्धमानः अर्बुदो रोगो यस्य तेन, सततभूतलघर्षणादिति भावः।

(ष) कुवादीति। कुवादिना कौतुकाय मिथ्यावादिना जनेन दत्तस्य सिद्धाञ्जनस्य नेत्रौषधस्य दानेन अर्पणेन स्फुटितं नष्टं एकं लोचनं यस्य तस्य भावस्तया हेतुना, त्रिकालं प्रातर्मध्याह्नसायाह्नेषु, इतरलोचने अञ्जनदाने साधारणकज्जलार्पणे नतु कुवादिदत्तसिद्धाञ्जनदाने इत्यर्थः आदरेण यत्नेन श्लक्ष्णीकृता दारुशलाका दारुनिर्म्मिता कज्जलदानशलाका येन तेन, कुवादिदत्तसिद्धाञ्जनदोषेण वा अश्लक्ष्णासुखशलाकादोषेण वा लोचनमेकं स्फुटितमित्युभयथाप्याशङ्कावशादिति भावः।

(स) प्रत्यहमिति। कटुकालावुः कटुतुम्बी तस्याः स्वेदेन प्रारब्धो दन्तुरतायाः उन्नतदन्ततायाः प्रतीकारश्चिकित्सा येन तेन। तादृशस्वेदेन दन्तपातावश्यम्भावात् वर्व्वरताप्रतीतिः।

(ह) कथञ्चिदिति। कथञ्चित् केनापि प्रकारेण अस्थाने अविहितस्थाने दत्त इष्टकाप्रहारो यस्य तस्य भावस्तया हेतुना, शुष्के शुष्कीभूते एकस्मिन् भुजे उपशान्तं प्रयोजनाभावज्ञानाद्विरतं मर्द्दनव्यसनं वातविनाशकतैलमर्द्दनाग्रहो यस्य तेन। "आमवातजड़ीकृतदेहस्य तद्वातविनाशाय" तैलविशेषमर्द्दनानन्तरं स्थानविशेषे कारणाग्नितप्तेष्टकानां प्रहारश्चिकित्साशास्त्रनिर्द्दिष्टः, तस्मिंश्चास्थाने कृते कश्चिद्भुजः शुष्कतामापद्यते सा च शुष्कतास्य जाता, तथा चासौ तस्मिन् भुजे वातो विनष्ट इति मत्वा तैलमर्द्दनाग्रहं परिहृतवानिति सरलार्थः।

देह विचित्र करিয়াছিল। (ব) কর্ণাভরণের স্থানে একটি চূড়া পরিধান করিয়াছিল, তাহা বক্ষঃস্থল পর্য্যন্ত পতিত হওয়ায় সে, যেন রুদ্রাক্ষের মালা ধারণ করিতেছিল। (শ) চণ্ডীর চরণে পতিত হওয়ায় ললাটদেশ শ্যামবর্ণ হইয়াছিল এবং তাহাতেই ললাটের অর্ব্বুদরোগটা বৃদ্ধি পাইয়াছিল। (ষ) কোন মিথ্যাবাদি-প্রদত্ত সিদ্ধকজ্জল প্রয়োগ করায় একটি চক্ষু বিনষ্ট হইয়াছিল বলিয়া তিন বেলা অন্য চক্ষুতে সাধারণ কজ্জল দান করিবার সময়ে যত্নপূর্ব্বক দারু-শলাকাটিকে পালিশ করিয়াছিল। (স) প্রতিদিন তিতলাউর স্বেদ দিয়া উচু দাঁতগুলির চিকিৎসা আরম্ভ করিয়াছিল। (হ) কোন প্রকারে অস্থানে ইষ্টক প্রহার করায় একখানা হাত শুকাইয়া গিয়াছিল, সুতরাং তাহাতে তাহার তৈল মর্দ্দন করিবার আগ্রহ নিবৃত্তি

(१) क्वचित् इवशब्दो नास्ति। (२)···वर्द्धुदेन। (३) कुवादिक···, कुवादी···।
(४)···स्फोटितैक···, ···सिद्धाञ्जनस्फुटितैक···।

श्रान्त-सहन-व्यसनेन, (ऋ) उपर्य्युपर्य्यविश्रान्त-(१) कटुकवर्त्ति-प्रयोग-वर्द्धित-तिमिरेण, (क) अश्मभेद-संगृहीत-वराह-दंष्ट्रेण, (ख) इङ्गुदीकोष-कृतौषधाञ्जनसंग्रहेण, (ग) सूची-स्यूत-शिरा-सङ्कोचित-वाम-कराङ्गुलिना, (घ) कौशेयक-कोषावरण-(२) चति-व्रणित-चरणाङ्गुष्ठकेन, (ङ) असम्यक्कृत-रसायनानीताकाल-ज्वरेण, (च) जरां गतेनापि दक्षिणापथाधिराज्य-वर-प्रार्थना-कदर्थित-दुर्गेण, (छ) दुःशिक्षित-श्रमणादिष्ट-(३) तिलकाबद्ध-विभव-

---

(ऋ) उपरीति। उपर्य्युपरि अधिकाधिकं अविश्रान्तञ्च यथा स्यात्तथा यः कटुकवर्त्तिप्रयोगः कटुपदार्थनिर्म्मितनेत्ररोगनाशकवर्त्तिकादानं तेन वर्द्धितं तिमिरं नेत्ररोगविशेषो यस्य तेन।

(क) अश्मेति। अश्मभेदाय पाषाणभङ्गाय संगृहीता वराहदंष्ट्रा येन तेन।

(ख) इङ्गुदीति। इङ्गुदीकोषे इङ्गुदीफलकोषे कृत औषधाञ्जनस्य नेत्ररोगौषधीभूतकज्जलस्य संग्रहो येन तेन।

(ग) सूचीति। सूच्या स्यूताभिरीन्नत्यनिवृत्त्यर्थं सूत्रेण ग्रथिताभिः शिराभिः सङ्कोचिता दृढाकर्षणेन खर्वीकृता वामकराङ्गुलयो यस्य तेन।

(घ) कौशेयकेति। कौशेयककोषेण कृमिसूत्रकोषेण यदावरणं तेन या चतिः संघर्षस्तेन व्रणितः चतश्चरणाङ्गुष्ठं यस्य तेन। कुशादिसंघर्षवारणाय कौशेयककोषेणाङ्गुष्ठावरणम्।

(ङ) असम्यगिति। असम्यक् कृतेन अयथाविधि विहितेन रसायनेन जराव्याधिविध्वंसिभेषजसेवनेन आनीतः अकालज्वरो येन तेन। "यज्जराव्याधिविध्वंसि भेषजं तद्रसायन"मिति चरकः।

(च) जरामिति। जरां गतेनापि, नितान्तवृद्धेनापि सता, दक्षिणापथस्य दाक्षिणात्यदेशस्य यदधिराज्यं तस्य वरप्रार्थनया कदर्थिता विरक्तीकृता दुर्गा चण्डिका येन तेन।

(छ) दुरिति। दुःशिक्षितेन कुशिक्षाप्राप्तेन श्रमणेन केनचित् सन्न्यासिविशेषेण आदिष्टे तिलके आबद्धा कृता विभवप्रत्याशा धनसम्पदाकाङ्क्षा येन तेन।

---

পাইয়াছিল। (ঋ) সর্ব্বদা বেশি বেশি করিয়া কটু বর্ত্তি প্রয়োগ করায় নেত্ররোগ বৃদ্ধি পাইয়াছিল। (ক) পাথর ভাঙ্গিবার জন্য শূয়রের দাঁত সংগ্রহ করিয়াছিল। (খ) ইঙ্গুদী-ফলের কোষে নেত্ররোগের ঔষধ কজ্জল সংগ্রহ করিয়াছিল। (গ) সূচ দিয়া শিরাগুলিকে সেলাই করায় বাম হাতের আঙ্গুলগুলি সঙ্কুচিত হইয়াছিল। (ঘ) ক্রিমির চাক দিয়া আবরণ করায় তাহার ঘসাতে পায়ের বুঁড়ে আঙ্গুল ক্ষত-বিক্ষত হইয়াছিল। (ঙ) অসম্যগ্‌ভাবে রসায়ন সেবন করায় অকালে জ্বর আনয়ন করিয়াছিল। (চ) প্রাচীন হইলেও দাক্ষিণাত্য-দেশের রাজত্বের বর প্রার্থনা করায় দুর্গাদেবীকে বিরক্ত করিতেছিল। (ছ) কুশিক্ষায় শিক্ষিত কোন সন্ন্যাসীর আদেশে তিলক ধারণ করিয়া, তাহাতেই ধনসম্পত্তির প্রত্যাশা

---

(১) উপর্য্যবিশ্রান্ত...। (২) কৌশেয়কাস্তরণ...। (৩)...শ্রবণাদিষ্ট...।

प्रत्याशेन, (छ) हरित-पत्र-रसाङ्गार-मसी-(१) मलिन-शम्बूकवाहिना, (ज) पट्टिका-लिखित-दुर्गास्तोत्रेण, (झ) धूम-रक्तालक्तकाक्षर-ताल-पत्र-कुहक-तन्त्र-मन्त्र-पुस्तिका-संग्राहिणा, (ञ) जीर्ण-पाशुपतोपदेश-(२) लिखित महा-काल-मतेन, (ट) आविर्भूत-निधि-वाद-व्याधिना, (ठ) सञ्जात-धातु-वाद-वायुना, (ड) लग्नासुर-विवर-प्रवेश-पिशाचेन, (ढ) प्रवृत्त-यक्ष-कन्यका-कामित्व-मनोरथ-व्यामोहेन, (ण) वर्द्धितान्तर्धान-मन्त्रसाधनसंग्रहेण, (३) (त)

(ज) हरितेति। हरितपत्ररसेन हरिद्वर्णपर्णनिर्य्यासेन युक्ता या अङ्गारमसी तया मलिनं शम्बूकं वहतीति तेन शम्बूकमयमसीपात्रधारिणेत्यर्थः।

(झ) पट्टिकेति। पट्टिकायां काष्ठफलके लिखितं दुर्गास्तोत्रं येन तेन।

(ञ) धूमेति। धूमेन रक्तानि रञ्जितानि अलक्तकाक्षराणि अलक्तकलिखितवर्णा येषु तेस्तालशैस्ताल-पत्रैर्या कुहकाय इन्द्रजालाय तन्त्रमन्त्राणां पुस्तिका तां संग्टह्णातीति तेन।

(ट) जीर्णेति। जीर्णो वृद्धो यः पाशुपतः शैवस्तस्य उपदेशेन लिखितं महाकालमतं येन तेन।

(ठ) आविरिति। आविर्भूतो निधिवादः 'अनेनानुष्ठानेन निधिर्लभ्येत' इति धनभाण्डवाद एव व्याधिर्यस्य तेन।

(ड) सञ्जातेति। सञ्जातो धातुवादः 'अनेनानुष्ठानेन लौहं स्वर्णं भवति' इति धातुविषयकप्रवाद एव वायुर्वायुरोगो यस्य तेन।

(ढ) लग्नेति। लग्नः असुरविवरे प्रवेशः प्रवेशाग्रह एव पिशाचो यस्मिन् तेन।

(ण) प्रवृत्तेति। प्रवृत्तो जातो यक्षकन्यासु कामित्वमनोरथेन सम्भोगाभिलाषेण व्यामोहो विशेषेण मतिभ्रमो यस्य तेन।

(त) वर्द्धितेति। वर्द्धितो वृद्धिं प्रापितः अन्तर्धानमन्त्रसाधनाय संग्रह आग्रहो येन तेन।

করিতেছিল। (জ) হরিদ্বর্ণ পাতার রস ও আঙ্গারের কালী এই উভয়ে মলিনবর্ণ একটা ঝিনুক লইয়া চলিত। (ঝ) একখানা কাষ্ঠফলকে দুর্গার স্তব লিখিয়া রাখিয়াছিল। (ঞ) ইন্দ্রজালের জন্য একখানা তান্ত্রিক মন্ত্রের পুস্তক সংগ্রহ করিয়াছিল, তাহার তাল-পাতাগুলিতে আলতার রস দিয়া অক্ষর লেখা ছিল, তাহা আবার ধূমে রঞ্জিত করিয়াছিল। (ট) কোন প্রাচীন শৈবের উপদেশে মহাকালের মত লিখিয়া রাখিয়াছিল। (ঠ) 'এই অনুষ্ঠান করিলে নিধি (ধনের মাঠী) লাভ করা যায়' এই জাতীয় প্রবাদরূপ ব্যাধি তাহার হৃদয়ে আবির্ভূত হইয়াছিল। (ড) 'এই কার্য্য করিলে লোহা সোণা হয়', এই প্রবাদমূলক তাহার বায়ুরোগ জন্মিয়াছিল। (ঢ) অসুরের হ্রদে প্রবেশ করিবার আগ্রহরূপ পিশাচ তাহার পিছনে লাগিয়াছিল। (ণ) যক্ষকন্যাগণের সহিত সম্ভোগ করিবার অভিলাষ হওয়ায় তাহার মতিভ্রম জন্মিয়াছিল। (ত) অন্তর্ধান করিবার উপযোগী মন্ত্র সাধন করিবার জন্য

(१)...मषी...। (२) जीर्णमहापाशुपतोपदेश। (३)...अन्तर्धानमन्त्रसंग्रहेण।

